# श्रीहनूमत् पञ्चचामरम्

नमोऽस्तु ते हनूमते दयावते मनोगते
सुवर्णपर्वताकृते नभस्स्वतः सुताय ते ।
न चाञ्जनेय ते समो जगत्त्रये महामते
पराक्रमे वचःक्रमे समस्तसिद्धिसङ्क्रमे ॥ १॥

रविं ग्रसिष्णुरुत्पतन् फलेच्छया शिशुर्भवान्
रवेर्गृहीतवानहो समस्तवेदशा  कम् ।
भवन्मनोज्ञभाषणं बभूव कर्णभूषणं
रघूत्तमस्य मानसाम्बुजस्य पूर्णतोषणम् ॥ २॥

धरात्मजापतिं भवान् विभावयन् जगत्पतिं
जगाम रामदासतां समस्तलोकविश्रुताम् ।
विलङ्घ्य वारिधिं जवात् विलोक्य दीनजानकीं
दशाननस्य मानसं ददाह लङ्कया समम् ॥ ३॥

विलोक्य मातरं कृशां दशाननस्य तद्वने
भवानभाषत प्रियं मनोहरं च संस्कृतम् ।
समस्तदुष्टरक्षसां विनाशकालसूचनं
चकार रावणाग्रतः नयेन वा भयेन वा ॥ ४॥

महाबलो महाचलं समुह्य चौषधिप्रभं
भवान् ररक्ष लक्ष्मणं भयावहे महावहे ।
महोपकारिणं तदा भवन्तमात्मबान्धवं
समस्तलोकबान्धवोऽप्यमन्यत स्वयं विभुः ॥ ५॥

भवांश्च यत्र यत्र तत् शृणोति रामकीर्तनं

करोति तत्र तत्र भोः सभाष्पमस्तकाञ्जलिं ।
प्रदेहि मेऽञ्जनासुत त्वदीयभक्तिवैभवं
विदेहि मे निरञ्जनं च रामदासदासताम् ॥ ६ ॥

अगण्यपुण्यवान् भवान् अनन्यधन्यजीवनः
विमुच्य मौक्तिकस्त्रजं ददौ धरात्मजा मुदा ।
भवन्तमालिलिङ्ग यद् रघूत्तमः स्वयं वदन्
इदं हि मे हनूमतः प्रदेयसर्वमित्यहो ॥ ७ ॥

विदेहराजनन्दिनीमनोहरे वरे परे
विदेहमुक्तिदायके विधेहि मे मनो हरे ।
क्षणं क्षणं निरीक्षणं भवेद् यथा मयि प्रभोः
तथा निवेदयस्व मद्दशां दशाननान्तके ॥ ८ ॥

इदं च पञ्चचामरं गृहाण दासकल्पितं
समीरणात्मसम्भव प्रमोदमानचेतसा ।
रिपून् षडान्तरान् विनाशयाशु दुर्दमान्
पुनर्भवाख्यकर्दमात् विमुच्य पाहि पाहि माम् ॥ ९ ॥

इति श्रीहनूमत् पञ्चचामरस्तोत्रं सम्पूर्णम् ।